# अथ योहिप्राप्ति शिक्षा भाष्यम्

श्री गणाधिपतये नमः

श्रीमद्गणेशं प्रणिपत्य देवान् श्रीसूर्यनारायणसुप्रसादात् ।
वक्ष्ये क्रियाया स्वरलक्षणं तद्यद्धोमकन्यापुरसूरभट्टः १
तस्माच्चत्वारिपरश्चेदहरच्चाद्युदात्तवान् ।

तस्मात् । चत्वारि । इति पदद्वयं परं सत् अहरदित्यत्र क्रिया शब्दः आहरदित्याद्युदात्तो भवति । यथा । सोममाहरत्तस्माद्यज्ञमुखम् । सासोमञ्चाहरच्चत्वारि च । एवं पर इति किम् । सोममाहरत्तस्मिन्निन्द्रः । यज्ञमाहरद्यत्तद्वित्तं वेद्यम् ।

प्रायच्छत्त्रिर्यवं तस्मात्तस्मै त्वैष परस्त्वसि २

त्रिः । यवम् । तस्मात् । तस्मै त्वा । एषः । एवं परः प्रायच्छदित्यत्र अयच्छदिति पदमाद्युदात्तं स्यात् । असि सकारान्यवर्णे परे सति । यथा । यत्त्रिः प्रायच्छत्त्रिः । वसन्ताय प्रायच्छद्यवम् । जयान् प्रायच्छत्तस्माज्जयाः । प्रायच्छत्तस्मादैन्द्रावैष्णवम् । असीति किम् । तत्प्रायच्छत्तस्मात्सहस्रदक्षिणम् । इन्द्राय हि स तं प्रायच्छत्तस्मै त्वा । त्वेति किम् । उक्थ्यं प्रायच्छत्तस्मै द्वितीयम् । स तं तस्मै प्रायच्छदेष ते योनिः । एवं पर इति किम् । इन्द्राय वृष्णे प्रायच्छदुग्रः । तदस्मै प्रायच्छत्तत्प्रत्यगृह्णीत् । पृतना ज्येषु ।

प्राविशत्तं प्राह तादृग्यत्सोमः प्राजनयत्तथा ।

तत्रापि क्रिया द्युच्चवत्स्यात् । यथा । मेधोश्वं

प्राविशत्तमेवावरुन्धे । तमिति किम् । तद्यवं
प्राविशत्तद्यवेरमत । एवं पर इति किम् । सो
श्वं प्राविशत् सोश्वस्य । आहृत्य प्राह तादृगेव ।
तादृगिति किम् । देवमनुष्येभ्यः प्राह न पुरा । एषु
पराकृतं सर्वन्नीचमिति विज्ञेयम् । यथा । यत्सोमः
प्राजनयदग्निरग्रसत । यदिति किम् । तं सोमः
प्राजनयदग्निरग्रसत ।

प्रावेशयन्त्याददत तत्प्रायुञ्जत तेन च ३

क्रियोच्चात्रापि । यथा । तीर्त्थे हि ते तां
प्रावेशयन्तीर्त्थे स्नाति । तीति किम् । तदप्सु
प्रावेशयन्ताः । दीक्षा तपसी प्रावेशयन्नप्सु ।
यद्राष्ट्रभृद्भीराष्ट्रमाददत तद्राष्ट्रभृताम् । तदिति किम् ।
राष्ट्रमाददत यद्देवाः । छन्दसानुप्रायुञ्जत तेन नाप्नुवन् ।

मिन्दाभून्मायासीत्कुम्भ्यादादस्ति स्यवपूर्वकः ।

क्रियोच्चात्रापि । यथा । यन्म आत्मनोमिन्दाभूदग्निः
। मिन्देति किम् । तदु मे पिताभूदहम् । यज्ञो
हि तस्य मायासीद्यदुक्त्थ्यः । मायेति किम् ।
अधिपतिरासीत् । सह कुम्भ्यादात् । आशीर्मे
। कुम्भ्येति किम् । यावदेवास्यास्ति तत् ।
संहितायामुच्चत्वात्तस्य ग्रहणम् । यावदेवास्ति तदेषाम्
। स्यवेति किम् । अथैतस्यैवान्तो नास्ति ।

भ आशयद्भिपूर्वश्च परिभूरसि सादिगम् ४

उभयमेवाजामि । केन तदजामीति साहचर्यात् ।

तेन तदजामीति साहचर्यात् । मनसा गर्भ आशयत् । रूपेण ह्यासां रूपमभ्यैति यद्धिरण्येन । ह्यासां रूपमभ्यैति । हि पूर्व इति किम् । एतत्ते अग्ने राध ऐति । विश्वतः परिभूरसि । असीति किम् । संहिता काले आद्युदात्तस्य सन्देहाभावात् अत्रासीति ग्रहणम् । अर्द्धान्ते वर्त्तमानत्वादेतत्साहचर्यात् । वृत्रहन्वृत्रहासि । स्वधया कृतासि । इत्यनयोः पदकाले उदात्ताभावाद्योतनयति इति नार्द्धान्त इति ज्ञातव्यम् । अनेन प्रकारेण संहितोदात्तसंछिन्नमाहरदि त्यादित्येतत्पर्यन्तं क्रिया पदम् । पदकाले आद्युदात्तं भवतीत्युक्तम् ।

जहीन्द्रश्शृणुतेमान्तश्चिनुतेऽपात्मशीर्ष च ।

इन्द्रो वृत्रायेत्यनुवाके जहीति क्रियाशब्दः अन्तः अन्तोदात्तः स्यादित्यर्थः ।

शृणुते । चिनुते । अत्रैतावपि । जहीति सोब्रवीन्मा मे । जहीति तस्माद्विष्णुमन्वा भजति । एतदनुवाक इति किम् । एतेन जहीति तेनाभ्यायत । अत्र सर्वानुदात्तः । शृणुतेम हवम्मे । इममिति किम् । शृणुतेति वाव तदब्रवीत् । यो वा अपात्मानमग्निं चिनुतेपात्मा । यो वा अपशीर्षाणमग्निं चिनुतेऽपशीर्षा । एवं पर इति किम् । यमायैनं स चिनुतेपेतेति । एवाग्निं चिनुते हिꣳसायै । एषु च पदकाले सर्वानुदात्तः

प्रोक्षितं वीक्षितायात्र आदिशब्दावुदात्तगौ ५
प्र । वि । इमीमाववग्रहौ । अत्र पदकालेऽपि
उदात्तगौ । न प्रोक्षितो यत् । प्रोक्षितं गोपायत
। प्रोक्षितमिति प्र । उक्षितम् । गोपायत ।
इकारेण किम् । आज्यं प्रोक्षणम् । वीक्षितायेति
वि । ईक्षिताय । स्वाहा । ईक्षितेति किम् ।
वीक्षमाणाय स्वाहा । ततो वै सो विन्दत प्रजाम् ।
इत्यादिशब्दानामिङ्ग्योपसर्गौ च पदकाले प्युच्च एव ।
क्वचिदुच्चः । क्वचिन्नीचः । इति विकल्पाभावादस्य
ग्रहणं न स्यात्
चिनुतेथो सर्वं नीचं यच्छब्दात्पर इत्यपि ।
यथा । यदूषाः पुष्ट्यामेव प्रजननेग्निं चिनुतेथो ।
यच्छब्दपूर्वत्वादुदात्तत्वे प्राप्तिः । चिनुतेथो इति
सन्धिविधिनानुदात्तस्य दृश्यत्वाच्च । अत्र चिनुते इति
पदकाले सर्वत्र नीच इतीदं वचनमारभ्यते
संहितेन स्वरेणापि ज्ञेयश्शेषस्वरो बुधैः ६
यथा । जरदष्टिर्यथासत् । अग्रेपश्यत् । इत्यादीना
मुदात्तसन्धित्वादुदात्त एव । सोभवत् । सोब्रवीत्
। तेब्रुवन् । तेस्मिन् । इत्यादि स्वरितसन्धिः ।
पदकालेऽनुदात्त इति जानीयात् । यान्ते गच्छन् य एवं
विद्वान् । तस्य ते ददतु येषां प्राणोसि स्वाहा ।
यद्यावच्छब्दकौ यत्र यथाद्युच्चो यतो यदि ।
यदा यर्हि ह्यधश्चादिराद्वादशात्क्रियोच्चभाक् ७

त्रिविधपुंस्त्रीनपुंसकसंज्ञिकः । यच्छब्दः । यावच्छब्दश्च । यत्र । यदा । यथा । यर्हि । यदि । यतः । आद्युदात्तः । हि । इत्येतेषु शब्देषु पूर्वेषु सत्सु आद्वादशात् द्वादशपदपर्यन्तमाद्युदात्तं भवति । क्रियाशब्दः । पदमुदात्तवत् भवति । प्रथमः क्रिया शब्दः । उच्चवान् । कश्चिदाद्युदात्तः । कश्चिन्मध्योदात्तः । कश्चिदन्तोदात्तश्च भवेदित्यर्थः । यथा । यो वै देवेभ्यः प्रतिप्रोच्य यज्ञेन यजते । य एवं विद्वान्रोहिणीं लक्ष्मणां पष्ठौ हीं वार्त्रघ्नीन्ददाति । इत्याद्युदात्तः । यश्चीयते यत्सञ्चिते । इत्यादौ मध्योदात्तः । यो वै यमं देवयजनमस्या अनिर्याच्याग्निं चिनुते । अत्र चिनुत इत्यन्तोदात्तः । य एवं विद्वाꣳस एता आसते । य एकाष्टकायां दीक्षन्ते । यमेव प्रयुङ्क्ते । इत्यादिसमासः । यान्प्राचीनमाग्रयणात् । ग्रहान् गृह्णीयात् । सहस्रं वहसि येनाग्ने । येभिर्वाचम् । यस्मा एव परोक्षं वदन्ति । येभ्यो मधुप्रधावति । यस्मादेव योनेः । प्रजापतिः प्रजा असृजत । आद्युदात्ते । यस्य वा अयथा देवतम् । तस्य ते ददतु येषां प्राणोसि स्वाहा । ते दत्तां ययोः प्राणोसि स्वाहा । यस्मिन्वा ऋतौ पुरुषः प्रमीयते । इति यच्छब्दे पुल्लिंगस्योदाहरणानि । अथ स्त्रीलिंगस्योदाहर्त्तव्यम् । या मम तनूस्त्वय्यभूत् । या वै देवतास्सदसि । याभिर्वै ददासि । यां वा एषो निष्टक आहुतिः ।

यस्यै वीर्येण पूर्वार्धेन । याभ्य एवैनं प्रच्यावयति ।
यस्या एव देवताया आलभ्यते । या साङ्गाजायन्त ।
यस्यां दिशि महीय्यसे । अथ नपुंसकस्य निर्देशात्
। यदाग्नेयो भवति । यदेतया देवा असुराणाम् ।
यदेव यज्ञेन नावरुन्धे । यद्ध्ना मधुमिश्रेणाभ्यनक्ति ।
यदेतेनाद्ध्यवसाययति । अत्र समासे क्रियाशब्दः ।
उदात्तवान् । यान्येवैनं भूतानि । यावदग्निहोत्रमासीत्
। यावदेवास्यासि । यावत एव पशून् । इत्यादि ।
यत्र यत्रैव मृत्युर्जायते । यदा ते मर्त्तः । यतः खलु वै
यज्ञस्य । आद्युद्ध इति किम् । यतः पुरोडाशः कूर्मो
भूत्वानु प्रासर्पत् यर्हि पशुम् । यथा नागतायातिथ्यम्
। आसीद्यदि वा तावत् । हि राजन्यो यजते ।
सिंहीर्ह्येषा रूपं कृत्वा । ह्येष सन्मनुष्यानुपैति ।
प्रथमाग्नीति किम् । यथा वै पुत्रः । यदेते गृह्यन्ते ।
या प्रजाः पराबहुर्वै यो वै दे प्राण उत्तरः ।
य एवमहर्यत् सोमः प्रयत्त्रिः प्राययद्धिमन् ८
सोमाग्निशब्दौ चेति केचित् । अत्र एकस्मिन् द्वौद्वौ
क्रियाशब्दावुद्धन्तौ भवेताम् । यथा । या प्रजाः परा
भवन्तीः । बहुर्वै भवतः । यो वै देवान् ।
यदुपांशुपात्रेण प्रथमश्च । य एवं विद्वानग्निमुपतिष्ठतेहः
। यत्सोमः प्राजनयदग्निः । यत्त्रिः प्रायच्छत्त्रिः ।
यद्धि मनसा ध्यायति तत् ।
यन्मैत्रावरुणा यो वैसौ यथाक्षंश्च योग्निषः ।

ह्येतं विद्विर्यथानसि त्रिभवेद्यत्पुनश्चितिम् ९
यन्मैत्रावरुणं पयसा श्रीणाति । यो वै सोममप्रतिष्ठाप्य । यथाक्षन्नापन्नं विधावति । य एवं विद्वानग्निष्टोमेन यजते । यदा ह्येतं विभरन्त्यथ । यथानसि युक्त आधीयते । यत्पुनश्चितिं चिनुत आहुतीनाम् ।
आयुर्वा अन्यशब्दादिस्सोमं वारुण एष ते ।
तद्यथा । अर्धिनोन्येग्रहा गृह्यन्ते । आ सोमं वहन्ति । यदेवादस्सोममाह्रियमाणम् । प्रत्येव सोमꣳस्थापयति । अत्रेति किम् । एवैनत्तं सोमम् । सोममाहरन् । यदेतेभ्यः ।
पृथिव्यै त्वेति सोमेऽपि न कुर्यात्पूर्वयापि च १०
सोमे प्रस्नुचो हरन् । अत्र किम् । द्वादशाहीने सोम उपैति । एव पूर्वया लभते । एवैनं पूर्वया विन्दति । न कुर्यादिति किम् । पूर्वया छम्बट् कुर्यात् ।
वत्सञ्चाधिश्रयत्यन्तं नाववेप्रपुरोदये ।
यथा । वत्सञ्चोपावसृजति । नाववेप्रपुरोदयेदिति किम् । अधिश्रयत्यव च हन्ति ।
अपयुष्मदाद्यावर्त्ततान्तमवर्ण आदितः ११
अप युष्मदक्रमीत् । अवर्ण आदित इति किम् । विह्वयामहा इति ।
नक्षोधुकश्च सा सोममद्ध्वानोग्निः पुरासभाम् ।
अग्निरमुष्मिन्देवानां त्रीणि चशकथा गवि १२
सोमोऽग्निरेवास्मा ऊर्द्ध्वा सत्यादनस्थिकेन च ।

आदित्या अमुष्मिंश्चाच्युत्पयो विश्वेऽन्वतिष्ठत्तत् १३

एवं पूर्वः पञ्चमपदपर्यन्तं क्रियापदमुच्चवत्स्यात् । यथा । नक्षोधुको भवति नास्य रुद्रः । सा सोमं चाहरच्चत्वारि चाक्षराणि । अध्वानोभूवन् । अग्निः पुरा भवति । अव सभां रुन्धे । अग्निरमुष्मिल्लोँक आसीत् । अग्निर्देवानां दूत आसीत् । त्रीणि च शतान्यसृज्यन्त । सोमश्च कथा सोमायातिथ्यं क्रियते । तत्त्वेडा गव्यैरयत् । आ इति किम् । सोम एवास्मै रेतो दधाति । अग्निरेवास्मै प्रजां प्रजनयति । तत्पराविति किम् । सोमो वै सहस्रमविन्दत् । अग्निर्देवेभ्योपाक्रामत् । कस्मात्सत्यादनस्थिकेन प्रजाः । कस्मात्सत्यादेकपात्रा द्विदेवत्या गृह्यन्ते । एवं पर इति किम् । कस्मात्सत्याद्गायत्रिया उभयतः । आदित्या अमुष्मिल्लोँक आर्ध्नुवन्त्र्यहाभ्यामस्मिन् । देवा अमुष्मिल्लोँक आर्ध्नुवन् । चरुणास्मिन् । आदित्या इति किम् ।
अमुष्मिल्लोँक आर्ध्नुवंचरुणा । पौर्णमास्यां चाच्युतो भवति । पयो व्रतं भवति । विश्वेदेवाश्शृणुतेमं हवम्मे । अन्वतिष्ठत जहीति सः ।

वान्यशब्दात्पूर्वपक्षे पूर्वेष्वापञ्चमस्तथा ।

वाशब्दः अन्यशब्दश्च पूर्वः पूर्वपक्षे आपञ्चमः क्रियाशब्दः उच्चवान् स्यात् । यथा । यज्ञो वा वै यज्ञपतिंदुहे । अन्ये वा वै निधिमगुप्तं विन्दन्ति

। स वान्यञ्जिनीयात् । अन्तर्वेद्यन्यः पादो भवति ।
अन्योनड्वान् भवति । अन्या यन्ति । पूर्वपक्ष इति
किम् । अग्निचिद्वाग्निंदुहे ताम् ।
सव्योनयज्ञोवस्वी च द्विर्निनानायतनानृणम् १४ ।
यवं सौदासा नभोध्वौ रथचक्रं परासु च ।
एवं परश्चकाराकृष्टादापञ्चमात्पूर्वं क्रियापदमुच्चभाक्स्यात्
। यथा । दक्षिणो युक्तो भवति सव्यः ।
नान्धोध्वर्युर्भवति न यज्ञः । उर्वी चासि वस्वी
चासीत्याह । द्विर्जुहोति । द्विर्निमार्ष्टि । न प्रमायुको
भवति । नानायतनः । पितृणामनृणो भवति ।
तदेवतस्या अनृणम् । वसन्ताय प्रायच्छद्यवम् । ततो
वै सो विन्दत प्रजामभि सौदासानभवत् । भ्रातृव्यान्नुदते
प्रति जनिष्यमाणान्रथचक्रचितम् । चिन्वीत । एवं
पर इति किम् । भ्रातृव्यान्नुदतेऽभिक्रामं जुहोति । ततो
देवा अभवन् परासुराः ।
संबद्धश्चान्तसान्निद्ध्ये तुल्ययोरादिरुच्चवान् १५
चकारज्ञापितपूर्वप्राप्तौ सत्यां तत्क्रियासंबद्धः
क्रियाशब्द उच्चवान् । लोक ऋध्नुवन्ति त्र्यहाभ्याम्
। प्रजातान्भ्रातृव्यान्नुदेय । सादृश्ययोस्समीपेऽप्यन्तः
द्वितीयः उच्चवान् । तरति तरति । अदृशन्नदृशन् ।
असन्निधौ चेदादिः सशब्द उच्चवान् । भवत्यात्मना
परास्य । आसीदार्ध्यत तद्यदसुराणाम् ।
ब्रह्मणैवात्मानमुद्गृह्णाति । आदिरिति किम् । भ्रातृव्यं

निगृह्णाति ।
मयति वषट्स्तृणुते तृतीषोरुन्ध एव च ।
युनक्ति प्रजापास्यस्तु पाह्यादि यजुरादि चेत् १६
अत्र क्रियाशब्दौ उच्चवन्तौ भवेताम् । यथा ।
याज्यया गमयति वषट्कारेणैवैनम् । द्वितीयेन स्तृणुते
तृतीयेन । अवाशिषो रुन्धे । अभिसुवर्गं लोकं जयति
। एवैनं युनक्ति प्रजापतिना विमुञ्चति । ईड्यश्चासि
वन्द्यश्च वाजिन् । असि यमो अस्यादित्यो अर्वन् ।
अस्यग्ने विभावसुः । अस्तु मेत्रापीत्यस्तु हीसूनु इति
। पाहि यज्ञं पाहि यज्ञपतिम् । पाहि माद्य दिवः ।
पाहि माग्ने । आहुस्ते त्रीणि । एवमसिशब्दादिपदे
समुदायः । यजुरादिरुदात्तवद्भवतीत्युक्तम् ।
यजुरादिरिकिम् । वस्व्यसि । विष्णोः क्रमोसि ।
तदस्तु तुभ्यम् । तया नः पाहि । प्राणं मे पाहि ।
त्रीणि त आदुर्दिवि ।
नघ्नीरण्यृषभं द्वेद्वेधः क्रिया चान्यश्रुतींग्यभाक् ।
एवं पूर्वः क्रिया उच्चवती न स्यात् । यथा ।
यत्कर्णगृहीता वार्त्रघ्नी स्यात् । उदाहरणानि ।
यत्पदिबद्धानुस्तरणी स्यात् । प्रमायुको यजमानः स्यात्
। यदिष्टकाश्चित्याश्चित्यामृषभमुपदधाति । यत्सह
सर्वाणि मानुषाणि द्वेद्वे संभरति । इंग्यभागन्यशब्दः न
निमित्तं स्यात् । अन्यदन्यत्साम भवति ।
यथामनुर्मनुष्याश्च योदयाजीसयो यथा १७

एतानि निमित्तानि न स्युः । यथा मनुर्मनुष्याणामेवं भवति । यथा वै मनुष्याः । यो दर्शपूर्णमासयाजी सायंप्रातः । सेति किम् । यो दर्शपूर्णमासयाजी सन् । यो यथा देवतं न देवताभ्य आवृक्ष्यते ।

शीर्ष्णादिध्रुव ऊषाश्चान्वञ्चावाज्यं पुरीष च ।
अंगारेष्वारुणो वेणोरजा वेदिः परं च यत् १८

एवं परः यदिति व्यर्थं स्यात् । यथा । यच्छीर्ष्णाशीर् । षक्तिमान्थ्स्यात् । यद्ध्रुव उत्तमो ग्रहाणां गृह्यते । आदिरिति किम् । यद्ध्रुव आत्मा होता । यदूषाः पुष्ट्यामेव । यदन्वञ्चौ पुरोडाशौ । यदाज्यमप्येव नः । यत्पुरीषमग्निमेव । यदङ्गारेषु भविष्यत् । यद्वारुणस्साक्षात् । यद्वेणोस्सुषिरम् । यदजा वशा वायव्याम् । यद्वेदिर्मेध्याम् ।

उपह्यात्मनो देवानां सुवर्गाश्वाद्ध चक्षुषी ।
रुद्रो मृन्मयमूर्ध्नो हि नीचं दधाति केवलम् १९

एवं परो हि शब्दो व्यर्थं स्यात् । यथा । आत्माह्युपहूतानाम् । प्रजा ह्यात्मनोऽन्तरतरा । एते हि देवानां भागधे । उपरीव हि सुवर्गो लोकः । ह्यश्वाद्गर्दभोश्वम् । द्वे हि चक्षुषी समान्या । सकृदिव हि रुद्र उत्तरार्धात् । न हि मृन्मयमाहुतिमानश औदुम्बरम् । नीचमनुदात्तमिति किम् । यथा पूर्वमभिजयति । यावत्मूत संवपति । तेषु वा एष सोमं दधाति । केवलमिति किम् ।

यथ्स्तोमभागा उपदधाति ।
चित्यामन्याञ्च नान्याञ्च पुरस्तादन्यां यदीतरम् ।
तस्य चित्यामन्यामुपदध्यात् ।
नान्यामुत्तरामिष्टकामुपदध्यात् । नान्यामाहुतिं
पुरस्ताज्जुहुयात् ।
पुरस्तादन्याः प्रतीचीरुपदधाति । यदीतरमुभयेनैव ।
नेति किम् । उभयमेवाजामि ।
घार्यारभ्यापितन्मद्ध्ये तच्छब्देऽनीचके स्थिते २०
संख्याशब्देऽप्यनेदन्ते सान्निध्यं नैकमष्टकम् ।
निमित्तक्रियाशब्दयोर्मद्ध्य इति शब्दादिके
स्थिते सति नोच्चस्स्यात् । यदाघार आत्मा
पशुराघारमाघार्य । यच्चित्रापूर्णमासो मुखतः ।
आ इति किम् । यो वै श्रद्धामनारभ्य यज्ञेन यजते
। अत्र व्याहृत्यानामुच्चत्वम् । यदन्तरिक्षन्तदु
मे पिताभूत् । यत्सौम्यो ब्रह्मवर्चसं तेन ।
यद्द्वादशकपालस्तेन वैश्वानरात् । या वेवदेवानां
हरीताभ्याम् । यास्तूपरा उभय्यो वाव । याः प्रथमा
यज्ञम् । यच्चतुर्थमहस्तस्मिन् । यद्द्वादशोद्यामम्
। यन्नवकपालस्त्रिवृतैवास्मिन् । वारे वृतं ह्यस्यै
तृतीयं ब्रह्महत्यायै । अनीचक इति किम् ।
तज्जघन्यामनुस्तरणीं कुरुते । य एवं विद्वांसश्चतूरात्रेण
यजते । य एवं विद्वांसस्त्रयस्त्रिंशदहमासते ।
अनेदन्त इति किम् । यत्तृतीये संवत्सरेऽभिजिता

यजते । यच्चतुर्थेहन्नाग्रयणो गृह्यते । यदेकस्मिन्
यूपे द्वे रशने । अनेकमिति किम् । एकहायनादेनः
करोति । पिंगलयैकहायन्या सोमं क्रीणाति । एकस्य
प्रथमशब्दः पर्यायपदत्वात् तच्छब्दव्यवहितं वर्जयित्वा
। यो वा अग्निं चितं प्रथमः पशुरधि । नाष्टकमिति
किम् । यदाग्नेयोष्टाकपालोमावास्यायां भवति ।
असान्निध्यमिति किम् । ये केशिनः प्रथमास्सत्रमासत
। यदप्रतिरथं द्वितीयो होता । छन्दो यद्द्वादशकपालो
भवति । यस्यै वीर्येणोभयोः ।
ननु यदश्विभ्यां पूष्ण इत्यत्र दूरादपि कथमुच्चत्वम् ।
एकयजुष्ट्वादिति ब्रूमः ।
अपूर्वेऽपि क्रिया नित्यमित्याद्यन्ययजुःस्थितम् २१
यथा । यद्दक्षिणा पितृभ्यो निधुवेत् । नित्य इति किम्
। यस्यैवं विदुषोऽग्निहोत्रम् । दूतं वृणीमह इत्यन्वाह
। यत्पुष्करपर्णं रूपेणैवैनत् । यददाभ्य उपनद्धस्य
। यत्त्रैधातवीयम् । यस्य प्रतिष्ठावतीः पश्चात्प्रत्येव
तिष्ठति । पश्चात्सृष्ट ह्येकादशानूयाजान् यजति ।
वैश्वानरं हि देवतयायुः ।
त्रैष्टुभो हि राजन्योऽप्सु भस्म । यावानेवाग्निस्तं युनक्ति
। यन्मरुत्वतीया उदेव प्रथमेन । येन केन च स्तृणुत
इति च ।
न हि स तं हि ते तां हि तस्य माया हि तत्तथा ।
यान्ते गच्छन्तु यस्तस्यां यत्तद्येषां हि चात्र हि २२

यो यक्ष्ये यस्यैवं यत्तं यावानेव यङित्यपि ।

अत्र तच्छब्दादिव्यवेतत्वादुच्चनिषेधे सति प्रतिप्रसवार्थोयं नकारः । यथा । त्रिर्हि स तं तस्मै प्रायच्छत् । तीर्थे हि ते तां प्रावेशयन् । यज्ञो हि तस्य मायासीत् । मायेति किम् । वायुर्हि तस्य पवयिता । हि तद्वेद । यान्ते गच्छन् य एवम् । यस्तस्यान्दिशि । यत्तद्वित्तं वेद्यम् । येषां ह्येष भागः । यो यक्ष्य इत्युक्त्वा । यस्यैवं विदुषोदाभ्यो गृह्यते । यत्तन्दक्षिणाभिर्नराधयत् । यावानेव यज्ञस्तमन्ततः । ये यज्ञपतिं वर्द्धानि त्याह । इत्याद्येकयजुरन्तः पातित्वाभावाच्च ।

तत्स्वरसूचनार्थं हि बालानामिति वर्णितः २३

योहिभाष्यं संपूर्णम्

Reference:
*Yohi Prāpti Mūlam*, Staats-Universitaets Bibliothek, Hamburg, Germany, Grantha script on palm leaves, 2 folios, Palm-leaf bundle III 8/133, pp. 22-23, 23 verses.
*Yohi Bhāṣya*, Staats-Universitaets Bibliothek, Hamburg, Germany, Grantha script on palm leaves, 5 folios, Palm-leaf bundle III 8/133, pp. 161-170.
*Yohi Bhāṣya*, Government Oriental Library, Mysore, Telugu script on palm leaves, 8 folios, #144 (10).
*Yohi Bhāṣya*, Deccan College Library, Pune, #9814, Devanagari script on paper, 5 folios (http://ihg.cdacb.in/).
*Yohi Bhāṣya*, Government Oriental Manuscript Library, Chennai, #861, Grantha script on palm leaves, 3 folios (http://ihg.cdacb.in/).
*Yohi Bhāṣya*, Government Oriental Manuscript Library, Chennai, #991, Telugu script on palm leaves, 13 folios (http://ihg.cdacb.in/).
*Yohi Bhāṣya*, Sri Venkateswara University Oriental Research Institute Library, Tirupati, Manuscript #4446d, 11 folios, Grantha script on palm leaves (http://ihg.cdacb.in/).
*Yohi Bhāṣya*, Vishveshvaranand Vedic Research Institute, Hoshiarpur, Man-